# ॥ मन्त्रराजस्तोत्रं ब्रह्मवैवर्त पुराणान्तर्गतम् ॥

सौतिरुवाच ।
इदं च कवचं प्रोक्तं स्तोत्रं च शृणु शौनक ।
मन्त्रराजः कल्पतरुर्वसिष्ठो दत्तवान् पुरा ॥ ५५॥

ॐ नमः शिवाय ।

बाणासुर उवाच ।
वन्दे सुरणां सारं च सुरेशं नीललोहितम् ।
योगीश्वरं योगबीजं योगिनां च गुरोर्गुरुम् ॥ ५६॥

ज्ञानानन्दं ज्ञानरूपं ज्ञानबीजं सनातनम् ।
तपसां फलदातारं दातारं सर्वसम्पदाम् ॥ ५७॥

तपोरूपं तपोबीजं तपोधनधनं वरम् ।
वरं वरेण्यं वरदमीड्यं सिद्धगणैर्वरैः ॥ ५८॥

कारणं भुक्तिमुक्तीनां नरकार्णवतारणम् ।
आशुतोषं प्रसन्नास्यं करुणामयसागरम् ॥ ५९॥

हिमचन्दनकुन्देन्दुकुमुदाम्भोजसन्निभम् ।
ब्रह्मज्योतिस्वरूपं च भक्तानुग्रहविग्रहम् ॥ ६०॥

विषयाणां विभेदेन बिभ्रन्तं बहुरूपकम् ।
जलरूपमग्निरूपमाकाशरूपमीश्वरम् ॥ ६१॥

वायुरूपं चन्द्ररूपं सूर्यरूपं महत्प्रभुम् ।
आत्मनः स्वपदं दातुं समर्थमवलीलया ॥ ६२॥

भक्तजीवनमीशं च भक्तानुग्रहकारकम् ।
वेदा न शक्ता यं स्तोतुं किमहं स्तौमि तं प्रभुम् ॥ ६३॥

अपरिच्छिन्नमीशानमहो वाङ्मनसोः परम् ।
व्याघ्रचर्माम्बरधरं वृषभस्थं दिगम्बरम् ॥ ६४॥

त्रिशूलपट्टिशधरं सम्मितं चन्द्रशेखरम् ।
इत्युक्त्वा स्तवराजेन नित्यं बाणः सुसंयतः ॥ ६५॥

प्रणमत् शङ्करं भक्त्या दुर्वासाश्च मुनीश्वरः ।
इदं दत्तं वसिष्ठेन गन्धर्वाय पुरा मुने ॥ ६६॥

कथितं च महास्तोत्रं शूलिनः परमाद्भुतम् ।
इदं स्तोत्रं महापुण्यं पठेद्भक्त्या च यो नरः ॥ ६७॥

स्नानस्य सर्वतीर्थानां फलमाप्नोति निश्चितम् ।
अपुत्रो लभते पुत्रं वर्षमेकं शृणोति यः ॥ ६८॥

संयतश्च हविष्याशी प्रणम्य शङ्करं गुरुम् ।
गलत्कुष्ठी महाशूली वर्षमेकं शृणोति यः ॥ ६९॥

अवश्यं मुच्यते रोगात् व्यासवाक्यमिति श्रुतम् ।
कारागारेऽपि बद्धो यो नैव प्राप्नोति निर्वृतिम् ।
स्तोत्रं श्रुत्वा मासमेकं मुच्यते बन्धनात् ध्रुवम् ॥ ७१॥

भ्रष्टराज्यो लभेद्राज्यं भक्त्या मासं शृणोति यः ।
मासं श्रुत्वा संयतश्च लभेद्भ्रष्टधनो धनम् ॥ ७२॥

यक्ष्मग्रस्तो वर्षमेकमास्थिको यः शृणोति चेत् ।
निश्चितं मुच्यते रोगात् शङ्करस्य प्रसादतः ॥ ७३॥

यः शृणोति सदा भक्त्या स्तवराजमिदं द्विज ।
तस्यासाध्यं त्रिभुवने नास्ति किञ्चिच्च शौनक ॥ ७४॥

कदाचिद्बन्धुविच्छेदो न भवेत् तस्य भारते ।
अचलं परमैश्वर्यं लभते नात्र संशयः ॥ ७५॥

सुसंयतोऽतिभक्त्या च मासमेकं शृणोति यः ।
अभार्यो लभते भार्यां सुविनीतां सतीं रमाम् ॥ ७६॥

महामूर्खश्च दुर्मेधा मासमेकं शृणोति यः ।
बुद्धिं विद्यां च लभते गुरूपदेशमात्रतः ॥ ७७॥

कर्मदुःखी दरिद्रश्च मासं भक्त्या शृणोति यः ।
ध्रुवं वित्तं भवेत् तस्य शङ्करस्य प्रसादतः ॥ ७८॥

इह लोके सुखं भुक्त्वा कृत्वा कीर्तिं सुदुर्लभाम् ।
नानाप्रकारधर्मं च यात्यन्ते शङ्करालयम् ॥ ७९॥

पार्षदप्रवरो भूत्वा सेवते तत्र शङ्करम् ।
यः शृणोति त्रिसन्ध्यं च नित्यं स्तोत्रमनुत्तमम् ॥ ८०॥

इति श्रीब्रह्मवैवर्ते महापुराणे ब्रह्मखण्डे सौतिशौनकसंवादे
स्तवराजोऽयमूनविंशोऽध्यायः ॥